# अथ

# बगलामुखीस्तोत्रं

# प्रारभ्यते ।

श्रीगणेशाय नमः॥ श्रीराधाकृ-
ष्णाभ्यां नमः॥ ॐ अस्य श्री-
बगलामुखीस्तोत्रस्य भगवान्
नारद ऋषिः।बगलामुखी देवता॥
ममसन्निहितानां विरोधिनां वा-

ब०    स्तो०

ष्टुखपदबुद्धीनां स्तम्भनार्थे श्री-

२    बगलामुखीवरप्रसादसिद्ध्यर्थे

जपे विनियोगः॥ ॐ ह्लीम् अङ्गु-

ष्ठाभ्यां नमः॥ ॐ बगलामुखि    २

तर्जनीभ्यां स्वाहा॥ ॐ सर्वदु-

ष्ठाभ्यां मध्यमाभ्यां वषट् ॥ ॐ वाचं मुखं पदं स्तम्भय अनामिकाभ्यां हुम् ॥ ॐ जिह्वां कीलय कीलय कनिष्ठिकाभ्यां वौषट् ॥ बुद्धिं नाशय ह्लीं ॐ स्वाहा

करतलकरपृष्ठाभ्यां फट् ॥ एवं
हृदयादिषु॥ अथ ध्यानम् ॥ सौ-
वर्णासनसंस्थितांत्रिनयनां पी-
तांशुकोल्लासिनीं हेमाभाङ्गरुचिं
शशाङ्कमुकुटांस्त्रकचम्पकस्रग्यु-

ताम् ॥ हस्तैर्मुद्गरपाशबद्धरसनां
संबिभ्रतीं भूषणव्याप्ताङ्गीं बग-
लामुखीं त्रिजगतां संस्तम्भिनीं
चिन्तये ॥ १ ॥ अथ मन्त्रः ॥ ॐ
ह्लीं बगलामुखि सर्वदुष्टानां वा-

चं मुखं पदं स्तम्भय जिह्वां की-
लय कीलय बुद्धिं नाशय ह्लीं ॐ
स्वाहा ॥ ॐ मध्ये सुधाब्धिमणि-
मण्डपरत्नवेदीसिंहासनोपरिग-
तां परिपीतवर्णाम् ॥ पीताम्ब-

राभरणमाल्यविभूषिताङ्गीं देवीं
भजामि धृतमुद्गरवैरिजिह्वाम् १
जिह्वाग्रमादाय करेण देवीं वामे-
न शत्रून् परिपीडयन्तीम्॥ गदा-
भिघातेन च दक्षिणेन पीताम्ब-

राढ्यां द्विभुजां भजामि॥२॥ॐ



चलत्कनककुण्डलोल्लसितचा-
रुगण्डस्थलांलसत्कनकचम्प-
कद्युतिमदिन्दुबिम्बाननाम्॥ग-
दाहताविपक्षकांकलितलोलजि-

ह्वाञ्चलां स्मरामि बगलामुखीं
विमुखवाङ्मनस्तम्भिनीम् ॥ ३॥
पीयूषोदधिमध्यचारुविलसद्र-
क्तोत्पले मण्डपे सत्सिंहासनमौ-
लिपातितरिपुं प्रेतासनाध्यासि-

नीम्॥ स्वर्णाभा करपीडितारि-
रसनां भ्राम्यद्गदां विभ्रमामित्थं
ध्यायति यान्तितस्य विलयंस-
द्योऽथ सर्वापदः॥ ४॥ देवि त्व-
च्चरणाम्बुजार्चनकृते यः पीत-

पुष्पाञ्जलीन् भक्त्या वामकरे
निधाय च मनुं मन्त्री मनोज्ञा-
क्षरम् ॥ पीठध्यानपरोऽथ कुंभ-
कवशाद्बीजं स्मरेत्पार्थिवस्त-
स्यामित्रमुखस्य वाचि हृदये

जाड्यं भवेत् तत्क्षणात् ॥ ५ ॥

वादी मूकति रङ्कति क्षितिपति-
वैश्वानरः शीतति क्रोधी शाम्य-
ति दुर्जनः सुजनति क्षिप्रानुगः
खञ्जति ॥ गर्वी खर्वति सर्वविच्च

जडाति त्वद्यन्त्रणायान्त्रित: श्री-
नित्ये बगलामुखि प्रतिदिनं क-
ल्याणि तुभ्यं नम:॥ ६ ॥ मन्त्र-
स्तावदलं विपक्षदलनस्तोत्रं प-
वित्रं च ते यन्त्रं वादिनियन्त्रणं

त्रिजगतां जैत्रं च चित्रं च ते ॥
मातः श्रीबगलेति नाम ललितं
यस्यास्ति जन्तोर्मुखे त्वन्नामग्र-
हणेन संसदि मुखस्तम्भो भवे-
द्वादिनाम् ॥ ७ ॥ दुष्टस्तम्भनमु-

प्रविघ्नशमनं दारिद्र्यविद्रावणं भू-
भृद्भीशमनं चलन्मृगदृशां चेतः
समाकर्षणम् ॥ सौभाग्यैकनि-
केतनं समदृशः कारुण्यपूर्णामृतं
मृत्योर्मारणमाविरस्तु पुरतो मा-

ब० तस्त्वदीयं वपुः॥८॥ मातर्भञ्जय स्तो०

९ मेविपक्षवदनंजिह्वां च संकीलय

ब्राह्मीं मुद्रय नाशयाशुधिषणा-

मुग्रां गतिं स्तम्भय॥ शत्रूंश्चूर्णय ९

देवि तीक्ष्णगदया गौराङ्गि पी-

ताम्बरे विघ्नौघं बगलेहर प्रणम-
तां कारुण्यपूर्णेक्षणे ॥ १ ॥ मा-
तर्भैरवि भद्रकालि विजये वारा-
हि विश्वाश्रये श्रीविद्ये समये म-
हेशि बगले कामेशि रामे रमे ॥

मातङ्गि त्रिपुरे परात्परतरे स्वर्गा-
पवर्गप्रदे दासोऽहं शरणागतः
करुणया विश्वेश्वरि त्राहि माम्
॥ १० ॥ संरम्भे चौरसङ्घे प्रहर-
णसमये बन्धने वारिमध्ये वि-

द्यावादे विवादे प्रकुपितनृपतौ
दिव्यकाले निशायाम्॥ वश्ये वा
स्तम्भने वा रिपुवधसमये निर्ज-
ने वावने वा गच्छंस्तिष्ठंस्त्रिका-
लं यदि पठति शिवं प्राप्नुयादाशु

धीरः ॥ ११ ॥ नित्यं स्तोत्रमिदं पवित्रमिह यो देव्याः पठत्याद-राद्धृत्वा यन्त्रमिदं तथैव समरे बाहौ करे वा गले॥ राजानोऽप्य-रयो मदान्धकरिणः सर्पा मृगे-

न्द्रादिकास्ते वै यान्ति विमोहि-
ता रिपुगणा लक्ष्मीः स्थिराः सि-
द्धयः॥ १२॥ त्वं विद्या परमा त्रि-
लोकजननी विघ्नौघसंच्छेदिनी
योषाकर्षणकारिणी त्रिजगता-

मानन्दसंवर्द्धिनी ॥ दुष्टोच्चाटन-
कारिणी जनमनःसंमोहसंदा-
यिनी जिह्वां कीलनभैरवी विज-
यते ब्रह्मादिमन्त्रो यथा ॥१३॥
विद्यालक्ष्मीःसर्वसौभाग्यमायुः

पुत्रैः पौत्रैः सर्वसाम्राज्यसिद्धिः॥
मानं भोगो वश्यमारोग्यसौख्यं
प्राप्तं तत्तद्भूतलेऽस्मिन्नरेण १४
यत्कृतं जपसन्नाहं गदितं परमे-
श्वरि॥ दुष्टानां निग्रहार्थाय तद्गु-

हाण नमोऽस्तु ते ॥१५॥ ब्रह्मा-
स्त्रमिति विख्यातं त्रिषु लोकेषु
विश्रुतम्॥ गुरुभक्ताय दातव्यं न
देयं यस्य कस्यचित् ॥१६॥ पी-
ताम्बरां द्विभुजां च त्रिनेत्रां गा-

त्रकोज्ज्वलाम् ॥ शिलामुद्गरह-
स्तां च स्मरेत्तां बगलामुखीम्
॥ १७ ॥

इति श्रीरुद्रयामले बगलामु-
खीस्तोत्रं समाप्तम् ।

पुस्तक मिलनेका ठिकाना-

गंगाविष्णु श्रीकृष्णदास,

"लक्ष्मीवेङ्कटेश्वर" छापाखाना,

# कल्याण—मुम्बई.

# ❋ रामस्तवराज सटीक ❋

इस कलिकालमें जन्म पाकर मनुष्यको केवल संसारहीमें निमग्न न रहना चाहिये किन्तु कुछ मुक्तिकाभी साधन करना चाहिये। इस युगमें रामनामसंकीर्तनके अतिरिक्त और कोईभी मुक्तिका साधन नहीं हो सकता। क्यों कि कृतादि युगोंमें ध्यान धारणा यज्ञ इत्यादिकोंसे मुक्ति होती थी। परन्तु कलियुगमें केवल भगवत्कीर्तनसेही मुक्ति प्राप्त होती है। यह बात श्रीमद्भागवत द्वादशस्कंधमें भली भांति वर्णित है। महाशय! यदि रामनामसंकीर्तनद्वारा मुक्तिकी

इच्छा रखते हो तो हमारे यहां छपे हुए रामस्तवराज ग्रन्थका संग्रह करिये तिसके नामसेही अंतर्गत गुणोंका ज्ञान हो जायगा. मूल्य ६ आनाही रखा है ।

## जानकीसत्सई ।

इसमें नायक नायिका लक्षण चेट विट विदूषक आदिकोंका लक्षण श्रृंगारादि सब रसोंका निरूपण स्थायिभावोंका वर्णन दृश अवस्थाओंका बयान स्त्रीका नखशिख वर्णन इत्यादि साहित्यके बहुत विषय हैं कुल दोहे ७०० हैं. कीमत ७ आना.

